रामायणमहानदीं ॥१५॥ जितंभगवता
तेन हरिणा लोकधारिणा ॥अजेन विश्व
रूपेण निर्गुणेन गुणात्मना ॥ १६ ॥ तपः
स्वाध्यायनिरतंतपस्वीवाग्विदां वरम् ॥
नारदं परिपप्रच्छवाल्मीकीर्मुनिपुंगवम्
॥ १७ ॥ कोन्वास्मिन् सांप्रतं लोके गुण
वान् कश्च वीर्यवान् ॥ धर्मज्ञश्चकृतज्ञश्च

सत्यवाक्यो दृढव्रतः॥१८॥ चारित्रेण च 

 को युक्तः सर्वभूतेषु को हितः॥ विद्वान् कः
कः समर्थश्चकश्चैकः प्रियदर्शनः ॥१९॥
आत्मवान्को जितक्रोधो द्युतिमान् कोन
सूयकः ॥ कस्य बिभ्यति देवाश्च जात
रोषस्य संयुगे॥२०॥एतदिच्छाम्यहं श्रो 
तुं परं कौतूहलं हि मे॥ महर्षे त्वं समर्थोसि

ज्ञातुमेवंविधं नरम् ॥ २१ ॥ श्रुत्वा चैत

त्रिलोकज्ञो वाल्मीकेर्नारदोवचः ॥ श्रूय
तामिति चामंत्र्य प्रहृष्टो वाक्यमब्रवीत्
॥ २२ ॥ बहवो दुर्लभाश्चैव ये त्वया की
र्तिता गुणाः ॥ मुने वक्ष्याम्यहं बुद्ध्वा तै
र्युक्तः श्रूयतां नरः ॥ २३ ॥ इक्ष्वाकुवंश
प्रभवो रामोनाम जनैः श्रुतः ॥ निय

 

तात्मा महावीर्यो द्युतिमान् धृतिमान् व
शी॥२४॥ बुद्धिमान्नीतिमान् वाग्मी श्री
मान् शत्रुनिबर्हणः॥ विपुलांसो महाबा
हुः कंबुग्रीवो महाहनुः॥२५॥ महोरस्को
महेष्वासो गूढजत्रुररिंदमः॥ आजानु
बाहुः सुशिराः सुललाटः सुविक्रमः॥
॥२६॥ समः समविभक्तांगः स्निग्धवर्णः

प्रतापवान् ॥ पीनवक्षा विशालाक्षो ल

क्ष्मीवान् शुभलक्षणः ॥ २७ ॥ धर्मज्ञः स
त्यसंधश्च प्रजानां च हिते रतः॥ यशस्वी
ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् ॥
॥२८॥प्रजापतिसमः श्रीमान् धाता रि
पुनिषूदनः ॥ रक्षिता जीवलोकस्य धर्म
स्य परिरक्षिता ॥२९॥ रक्षिता स्वस्य ध

मू. र्मस्य स्वजनस्य च रक्षिता ॥ वेदवेदांग रा.
६ तत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥३०॥ सर्व
शास्त्रार्थतत्त्वज्ञःस्मृतिमान्प्रतिभानवा
न् ॥ सर्वलोकप्रियःसाधुरदीनात्मा विच
क्षणः॥ ३१ ॥ सर्वदाऽभिगतःसद्भिःसमु
द्र इव सिंधुभिः ॥ आर्यःसर्वसमश्चैव स ६



दैव प्रियदर्शनः ॥ ३२॥ स च सर्वगुणोपे

तः कौसल्यानंदवर्द्धनः॥ समुद्रइव गांभी

र्ये धैर्येण हिमवानिव॥ ३३ ॥विष्णुना
सदृशो वीर्यै सोमवत्प्रियदर्शनः॥ काला
ग्निसदृशःक्रोधे क्षमया पृथिवीसमः ३४
धनदेन समस्त्यागे सत्येधर्म इवापरः॥
तमेवं गुणसंपन्नं रामं सत्यपराक्रमम् ३५
ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथःसुतं॥ प्र

कृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया
 ॥ ३६॥ यौवराज्येन संयोक्तुमैच्छत् प्री
त्या महीपतिः॥तस्याभिषेकसंभारान् दृ
ष्ट्वा भार्याथ कैकयी ॥३७॥ पूर्वं दत्तवरा
देवी वरमेनमयाचत ॥ विवासनं च राम
स्य भरतस्याभिषेचनम् ॥३८॥ ससत्य 



वचनाद्राजा धर्मपाशेन संयतः॥विवास

यामास सुतं रामं दशरथप्रियम् ॥ ३९ ॥

सजगा म वन वीरः प्रतिज्ञामनुपालयन्
॥ पितुर्वचननिर्देशात् कैकेय्याःप्रियकार
णात् ॥ ४० ॥ तं व्रजंतं प्रियो भ्राता ल
क्ष्मणोऽनु जगामह ॥स्नेहाद्विनयसंपन्नः
सुमित्रानंदवर्द्धनः ॥४१॥ भ्रातरं दयितो
भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ रामस्य द

मू. यिता भार्या नित्यं प्राणसमा हिता॥४२ रा.
८ जनकस्यकुलेजातादेवमायेवनिर्मिता॥
सर्वलक्षणसंपन्ना नारीणामुत्तमावधूः ॥
॥४३॥सीताप्यनुगता रामं शशिनं रो
हिणी यथा॥ पौरैरनुगतो दूरं पित्रा दशर
थेन च ॥४४॥ शृंगवेरपुरे सूतं गंगाकूले ८



व्यसर्जयत॥गुहमासाद्य धर्मात्मा निषा

दाधिपतिं प्रियम् ॥४५॥ गुहेन सहितो

रामोलक्ष्मणेन च सीतया ॥ ते वनेन व
नं गत्वा नदीस्तीर्त्वा बहूदकाः॥४६॥चि
त्रकूटमनुप्राप्य भरद्वाजस्य शासनात्॥
रम्यमावसथं कृत्वा रममाणा वने त्रयः
॥४७॥देवगंधर्वसंकाशास्तत्र ते न्यवस
न् सुखम् ॥ चित्रकूटं गते रामे पुत्रशोका

तुरस्तदा ॥४८॥ राजा दशरथः स्वर्गं ज
गाम विलपन् सुतम् ॥ गते तु तस्मिन् भ
रतो वसिष्ठप्रमुखैर्द्विजैः ४९ नियुज्यमा
नो राज्याय नैच्छद्राज्यं महाबलः ॥ स
जगाम वनं वीरो रामपादप्रसादकः ५०
गत्वा तु स महात्मानं रामं सत्यपराक्रमं
॥ अयाचद्भ्रातरं राममार्यभावपुरस्कृतः

॥५१॥त्वमेवराजाधर्मज्ञ इतिरामं वचो

ब्रवीत् ॥ रामोपिपरमोदारःसुमुखः सुम
हायशाः ॥५२॥ नचैच्छत्पितुरादेशाद्रा
ज्यंरामोमहाबलः ॥ पादुकेचास्यराज्या
य न्यासं दत्वा पुनःपुनः ॥ ५३ ॥ निवर्त
यामास ततो भरतंभरताग्रजः ॥ सकाम
मनवाप्यैव रामपादावुपस्पृशन् ५४ नं

दिग्रामेऽकरोद्राज्य रामागमनकांक्षया
१० ॥गते तु भरते श्रीमान् सत्यसंधो जितें
द्रियः ॥ ५५ ॥ रामस्तु पुनरालक्ष्य नाग
रस्य जनस्य च ॥ तत्रागमनमेकाग्रो दंड
कान् प्रविवेशह ॥ ५६ ॥ प्रविश्य तु महा
रण्यं रामो राजीवलोचनः ॥ विराधंराक्ष १०
संहत्वा शरभंगं ददर्श ह ॥ ५७ ॥ सुतीक्ष्णं

चाप्यगस्त्यंच अगस्त्य भ्रातरंतथा ॥ अ

गस्त्यवचनाच्चैव जग्राहैंद्रं शरासनं ॥५८
खड्गंचपरमप्रीतस्तूणींचाक्षय्यसायकौ ॥
॥ वसतस्तस्य रामस्य वने वनचरैः सह
॥ ५९ ॥ ऋषयोऽभ्यागमन्सर्वे वधायासु
ररक्षसां ॥ सतेषां प्रतिशुश्राव राक्षसानां
तदावने ॥ ६० ॥ प्रतिज्ञातश्च रामेण वधः

मू. संयतिरक्षसां ॥ ऋषीणामग्निकल्पानांदं रा.
११ डकारण्यवासिनां॥ ६१ ॥तेन तत्रैव वस
ता जनस्थाननिवासिनी ॥ विरूपिता शू
र्पणखा राक्षसी कामरूपिणी ॥ ६२ ॥ त
तः शूर्पणखावाक्याद्युक्तान्सर्वराक्षसा
न् ॥ खरं त्रिशिरसं चैव दूषणं चैव राक्षस ११
म्॥ ६३ ॥ निजघान रणे रामस्तेषां चैव

पदानुगान ॥ वने तस्मिन्निवसता जन

स्थाननिवासिनां ॥ ६४ ॥ रक्षसांनिहता
न्यासन् सहस्राणि चतुर्दश ॥ ततो ज्ञाति
वधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ६५ ॥
सहायं वरयामासमारीचं नामराक्षसम्
॥ वार्यमाणः सबहुशोमारीचेनसरावणः
॥ ६६ ॥ न विरोधो बलवता क्षमो रावण

मू. तेन ते॥ अनादृत्य तु तद्वाक्यं रावणः का रा.
१२ लचोदितः ॥६७॥ जगाम सहमारीचस्त
स्याश्रमपदं तदा॥ तेन मायाविना दूरम
पवाह्य नृपात्मजौ ॥६८॥ जहार भार्यां
रामस्य गृध्रंहत्वाजटायुषम्॥ गृध्रंचानि
हतंदृष्ट्वा हृतांश्रुत्वाचमैथिलीम्॥६९॥ १२
राघवः शोकसंतप्तो विललापाकुलेंद्रियः

॥ ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायु

षम्॥७०॥मार्गमाणो वने सीतां राक्षसं
संददर्श ह॥कबंधंनाम रूपेण विकृतं घो
रदर्शनम्॥७१॥तं निहत्यमहाबाहुर्ददा
ह स्वर्गतश्च सः ॥ सचास्मै कथयामास
शबरीं धर्मचारिणीं॥७२॥श्रमणां धर्म
निपुणामभिगच्छेति राघव ॥ सोभ्यग

चच्छन्महातेजाःशबरीं शत्रुसूदनः॥७३॥
शबर्यां पूजितः सम्यग्रामो दशरथात्म
जः॥पंपातीरे हनुमता संगतो वानरेण ह
॥७४॥ हनुमद्वचनाच्चैव सुग्रीवेण समा
गतः ॥ सुग्रीवाय च तत्सर्वं शंसद्रामो म
हाबलः॥ ७५ ॥आदितस्तद्यथा वृत्तं सी
तायाश्च विशेषतः॥सुग्रीवश्चापि तत्सर्वं

श्रुत्वा रामस्य वानरः ॥ ७६ ॥ चकार स

ख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ त
तो वानरराजेन वैरानुकथनंप्रति ॥ ७७ ॥
रामायावेदितंसर्वंप्रणयाद्दुःखितेन च ॥ प्र
तिज्ञातं च रामेण तदा वालिवधं प्रति ॥
॥ ७८ ॥ वालिनश्च बलं तत्र कथयामास
वानरः ॥ सुग्रीवःशंकितश्चासीन्नित्यं वी

यैण राघवे॥ ७९॥राघवप्रत्ययार्थं तु दुं
दुभेःकायमुत्तमं ॥ दर्शयामास सुग्रीवो
महापर्वतसन्निभम्॥ ८०॥उत्स्मायित्वा
महाबाहुःप्रेक्ष्य चास्थि महाबलः ॥ पा
दांगुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ८१
बिभेद च पुनस्तालान् सप्तैकेन महेषुणा
॥ गिरिं रसातलं चैव जनयन् प्रत्ययं त

दा ॥८२॥ ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः ॥ किष्किंधां रामसहितो जगाम च गुहां तदा ॥८३॥ ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिंगलः ॥ तेन नादेन महता निर्जगाम हरीश्वरः ॥८४॥ अनुमान्य तदा तारां सुग्रीवेण समागतः ॥ निजघान च तत्रैव शरेणैकेन राघवः ॥८५॥

मू. ततःसुग्रीववचनाद्धत्वावालिनमाहवे ॥ रा.
१५ सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत्
॥ ८६ ॥ स च सर्वान्समानीय वानरान्
वानरर्षभः ॥ दिशःप्रस्थापयामास दिदृ
क्षुर्जनकात्मजाम् ॥ ८७ ॥ ततो गृध्रस्य
वचनात्संपातेर्हनुमान् बली ॥ शतयोज १५
नविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ८८ ॥

तत्र लंकां समासाद्य पुरीं रावणपालि

ताम् ॥ ददर्श सीतां ध्यायंतीमशोकवनि
कागताम् ॥ ८९ ॥ निवेदयित्वाऽभिज्ञा
नं प्रवृत्तिं विनिवेद्य च ॥ समाश्वास्य च
वैदेहीं मर्दयामास तोरणम् ॥ ९० ॥ पंच
सेनाग्रगान् हत्वा सप्तमंत्रिसुतानपि ॥ शू
रमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥

॥९१॥ अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पै
तामहाद्वरात् ॥मर्षयन् राक्षसान्वीरो मं
त्रिणस्तान्यदृच्छया॥९२॥ततोदग्ध्वा
पुरींलंकामृतेसीतां च मैथिलीम् ॥रामा
य प्रियमाख्यातुं पुनरायान् महाकपिः
॥९३॥सोभिगम्य महात्मानं कृत्वा रामं
प्रदक्षिणम्॥ न्यवेदयदमेयात्मा दृष्टासी

तेतितच्चतः ॥९४॥ ततःसुग्रीवसहितो

गत्वातीरं महोदधेः ॥ समुद्रं क्षोभयामा
स शरैरादित्यसन्निभैः ॥ ९५ ॥दर्शयामा
स चात्मानं समुद्रःसरितां पतिः॥ समुद्र
वचनाच्चैव नलःसेतुमकारयत् ॥९६॥ ते
नगत्वा पुरीं लंकां हत्वा रावणमाहवे॥रा
मःसीतामनुप्राप्य परां व्रीडामुपागमत्

मू. ॥१७॥ तामुवाच ततो रामः परुषं जनसं रा.
१७ सदि ॥ अमृष्यमाणा सा सीता विवेश
ज्वलनं सती ॥१८॥ ततोग्निवचनात्सी
तां ज्ञात्वा विगतकल्मषाम् ॥ कर्मणा ते
न महता त्रैलोक्यं सचराचरम् ॥१९ ॥
सदेवर्षिगणंतुष्टं राघवस्यमहात्मनः ॥ ब १७
भौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥

॥१००॥ अभिषिच्य च लंकायां राक्ष

सेंद्रं विभीषणं॥ कृतकृत्यस्तदा रामो वि
ज्वरः प्रमुमोदह ॥१०१॥ देवताभ्यो व
रं प्राप्य समुत्थाप्य च वानरान् ॥ अयो
ध्यांप्रस्थितो रामः पुष्पकेण सुहृद्वृतः॥
॥१०२॥ भरद्वाजाश्रमं गत्वा रामः स
त्यपराक्रमः॥ भरतस्यांतिकेरामोहनूमं

मू. तं व्यसर्जयत् ॥१०३ ॥ पुनराख्यायि रा.
१८ कां जल्पन् सुग्रीवसहितस्तदा ॥ पुष्पकं
तत्समारुह्यनंदिग्रामं ययौतदा॥१०४॥
नंदिग्रामेजटांहित्वाभ्रातृभिःसहितोऽन
घः॥रामःसीतामनुप्राप्य राज्यं पुनरवा
प्तवान् १०५हृष्टःप्रमुदितो लोकस्तुष्टः १८
पुष्टःसुधार्मिकः॥निरामयो ह्यरोगश्च दु

भिक्षभयवर्जित: १०६ नपुत्रमरणंकेचि

द्रक्ष्यंति पुरुषाः क्वचित् ॥ नार्य्यश्चावि
धवा नित्यं भविष्यंति पतिव्रता:१०७
न चाग्निजं भयं किंचिन्नाप्सु मज्जंति
जंतवः॥न वातजं भयं किंचिन्नापि ज्व
रकृतं तथा॥१०८॥न चापि क्षुद्भयं तत्र
न तस्करभयंतथा॥ नगराणिच राष्ट्राणि

 धनधान्ययुतानि च ॥१०९॥ नित्यं प्र 
मुदिताःसर्वे यथा कृतयुगेतथा ॥ अश्व
मेधशतैरिष्ट्वा तथा बहुसुवर्णकैः॥११०
गवां कोट्या युतं दत्त्वा विद्वद्भ्यो विधि
पूर्वकं ॥ असंख्येयं धनं दत्त्वा ब्राह्मणे
भ्यो महायशाः ॥ १११॥ राजवंशान् 
शतगुणान्स्थापयिष्यति राघवः ॥ चा

तुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियो

क्ष्यति ॥११२॥ दशवर्षसहस्राणि दशव
र्षशतानि च ॥ रामो राज्यमुपासित्वा ब्र
ह्मलोकं प्रयास्यति ॥११३॥ इदंपवित्रं
पापघ्नं पुण्यं वेदैश्च संमितम्॥ यःपठेद्रा
मचरितं सर्वपापैःप्रमुच्यते ॥ ११४ ॥
एतदाख्यानमायुष्यं पठन्रामायणंनरः

मू. ॥ सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीय रा.
२० ते ॥ ११५॥ पठन् द्विजो वागृषभत्वमी
यात्स्यात् क्षत्रियो भूमिपतित्वमीयात्
॥ वणिग्जनः पुण्यफलत्वमीयाज्जनश्च
शूद्रोपि महत्वमीयात् ॥ ११६ ॥ चरितं
रघुनाथस्य शतकोटिप्रविस्तरं एकैक २०
मक्षरं पुंसां महापातकनाशनं ॥ ११७॥

रामाय रामभद्राय रामचंद्राय वेधसे ॥

रघुनाथाय नाथाय सीतायाः पतये न
मः॥११८॥इति श्रीमद्रामायणे वाल्मी
कीये आदिकाव्ये बालकांडेनारदोक्तरा
मायणसंक्षेपोनाम प्रथमःसर्गः ॥ १ ॥

इदं पुस्तकं मुंबापुर्यां भगीरथात्मजहरिप्रसादेन जगदीश्वर
मुद्रणालये मुद्रापितं संवत् १९४६ शके १८११

अथ

# रामस्तवराजः

प्रारंभः ।

गुन गाये नही प्रेम से श्री रंगनाथ के ॥ रहे न काहू काम [illegible] लोक लोक [illegible] [illegible] प्रभु मेरे पाप पुंज हैं अनेक

जन्म के संसार सिंधु [illegible]  [illegible] देव के ऐसो न कोई

काहू को कुल कपाट स्वर्ग के ॥२॥ तुम दीनबंधु दीनानाथ हो अनाथ के पापी अनेक तारे हो अधार नाम

के ॥३॥ कीर कर कुसल सङ्कहु दीन रातनाथ के अपराध छीमा कीजीये जन श्री नीवास के ॥१॥

सीया जु के प्रकुमारे दोउ नरवा अनुरागीन के घरवा ॥ क्या गुलाव क्या कमल कली लो क्या वउला

सीन अनरवा ॥ क्या कुशम जल बुँद पड़ती थीग इत रंगनी चुरवा ॥२॥ क्या मखमल क्या सी

रसी कलंगी क्या मोलवी पतरवा ॥ इन की कोमलता के आगे क्या कपोत वठ परना ॥ उर्द्धपद

म कल्प तरु अंकुस रेरवन के उजीयरवा एक एक रेरवन पर वारे तीभुवन केर सीगरवा

जीन के ध्योवत डरत ब्रह्मादिक जानि चुइ परे अनरया इन से लगन नही तो वीरथे ऊंडम

वंडल करवा ॥४॥

श्रीगणेशायनमः। ॐ अस्य श्रीरा

मचंद्रस्तवराजस्तोत्रमंत्रस्य । सन
त्कुमारऋषिः । अनुष्टुप्छंदः। श्री
रामोदेवता । सीताबीजं । हनुमान्
शक्तिः । श्रीरामप्रीत्यर्थेजपेविनि
योगः ॥ १ ॥ सूत उवाच । सर्वशा
स्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतं

धर्मपुत्रःप्रहृष्टात्मा प्रत्युवाच मुनी
श्वरं ॥२॥ युधिष्ठिर उवाच । भग
वन् योगिनां श्रेष्ठ सर्वशास्त्रविशारद
। किं तत्त्वं किं परं जाप्यं किं ध्या
नं मुक्तिसाधनं ॥३॥ श्रोतुमिच्छा
मि तत्सर्वं ब्रूहि मे मुनिसत्तम । वेद
व्यास उवाच । धर्मराज महाभाग

शृणु वक्ष्यामि तत्त्वतः ॥४॥ यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम् । तदेव परमं तत्त्वं कैवल्यपदकारणं ॥ ५ ॥ श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकं । ब्रह्महत्यादिपापघ्नमिति वेदाविदो विदुः ॥६॥ श्रीराम रामेति जना ये जपंति च स

राम वंदा। तेषाभुक्तिश्च मुक्तिश्चभाविष्य स्त,
२ ति न संशयः ॥ ७ ॥ स्तवराजं पुरा
प्रोक्तं नारदेन च धीमता। तत्सर्वं सं
प्रवक्ष्यामिहरिध्यानपुरःसरम् ॥८॥
तापत्रयाग्निशमनं सर्वाघौघनिकृंत
नं। दारिद्र्यदुःखशमनंसर्वसंपत्करं २
शिवम् ॥ ९ ॥ विज्ञानफलदं दिव्यं

मोक्षैकफलसाधनम् । नमस्कृत्यप्रव
क्ष्यामिरामंकृष्णंजगन्मयम् ॥ १०॥
अयोध्यानगरे रम्ये रत्नमंडपमध्य
गे । स्मरेत्कल्पतरोर्मूलेरत्नसिंहास
नं शुभम् ॥ ११॥ तन्मध्येष्टदलं प
द्मं नानारत्नैश्च वेष्टितम् । स्मरेन्म
ध्येदाशरथिंसहस्रादित्यतेजसम् ।

॥१२॥ पितुरंकगतं राममिंद्रनीलम
णिप्रभम् । कोमलांगंविशालाक्षंविद्यु
द्वर्णांबरावृतं ॥ १३ ॥ भानुकोटिप्र
तीकाशंकिरीटेनाविराजितं । रत्नग्रै
वेयकेयूररत्नकुंडलमंडितम् ॥१४॥
रत्नकंकणमंजीरकटिसूत्रैरलंकृतं ।
श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोप

शोभितम् ॥ १५ ॥ दिव्यरत्नसमा
युक्तं मुद्रिकाभिरलंकृतम् । राघवंद्वि
भुजंबालंराममीषत्स्मिताननम् ।
॥१६॥ तुलसीकुंदमंदारपुष्पमाल्यै
रलंकृतं । कर्पूरागुरुकस्तूरीदिव्यगं
धानुलेपनम् ॥१७॥ योगशास्त्रेष्व
भिरतं योगीशं योगदायकं । सदा

भरतसौमित्रिशत्रुघ्नैरुपशोभितम् ।
॥ १८ ॥ विद्याधरसुराधीशसिद्धगंध
र्वकिन्नरैः । योगींद्रैर्नारदाद्यैश्च स्तूय
मानमहर्निशम् ॥ १९ ॥ विश्वामि
त्रवासिष्ठादिमुनिभिः परिसेवितं । स
नकादिमुनिश्रेष्ठैर्योगिवृंदैश्चसेवितं ।
॥ २० ॥ रामं रघुवरं वीरं धनुर्वेदवि

शारदम् । मंगलायतनं देवं रामं रा
जीवलोचनम् ॥२१॥ सर्वशास्त्रार्थ
तत्त्वज्ञमानंदकरसुंदरं । कौसल्यानं
दनं रामं धनुर्बाणधरं हरिं ॥२२॥
एवं संचिंतयन्विष्णुंयज्ज्योतिरम
लं विभुं । प्रहृष्टमानसो भूत्वामुनि
वर्यःसनारदः ॥२३॥ सर्वलोकहि

तार्थाय तुष्टाव रघुनंदनं । कृतांजलि
पुटो भूत्वा चिंतयन्नद्भुतं हरिं २४
यदेकं यत्परं नित्यं यदनंतं चिदा
त्मकं । यदेकं व्यापकंलोकेतद्रूपं
चिंतयाम्यहं ॥२५॥ विज्ञानहेतुं वि
मलायताक्षं प्रज्ञानरूपं स्वसुखैकहे
तुं । श्रीरामचंद्रं हरिमादिदेवं परा

त्परं राममहं भजामि ॥ २६ ॥ क
विं पुराणं पुरुषं पुरस्तात् सनातनं
योगिनमीशितारं । अणोरणीयांस
मनंतवीर्यं प्राणेश्वरं राममसौ दद
र्श ॥ २७ ॥ नारदउवाच । नाराय
णंजगन्नाथमभिरामं जगत्पतिं ।
कविं पुराणं वागीशं रामं दशरथा

राम ६ स्त,

त्मजं ॥२८॥ राजराजं रघुवरं कौ
सल्यानंदवर्धनं । भर्गं वरेण्यं विश्वे
शं रघुनाथं जगद्गुरुं ॥२९॥ सत्यं
सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुं
। सौमित्रिपूर्वजंशांतं कामदंकमले
क्षणं ॥ ३० ॥ आदित्यं रविमीशानं ६
घृणिं सूर्यमनामयं । आनंदरूपिणं

सौम्यं राघवं करुणामयं ॥ ३१ ॥ जा
मदग्न्यं तपोमूर्तिं रामं परशुधारि
णम् । वाक्पतिं वरदं वाच्यं श्रीप
तिं पक्षिवाहनं ॥ ३२ ॥ श्रीशार्ङ्ग
धारिणंरामं चिन्मयानंदविग्रहं ।
हलधृग्विष्णुमीशानं बलरामंकृपा
निधिं ॥ ३३ ॥ श्रीवल्लभं कृपानाथं

जगन्मोहनमच्युतं । मत्स्यकूर्मव
राहादिरूपधारिणमव्ययं ॥ ३४ ॥
वासुदेवंजगद्योनिमनादिनिधनंहरिं
। गोविंदंगोपतिंविष्णुंगोपीजनमनो
हरं ॥३५॥ गोगोपालपरीवारंगोपक
न्यासमावृतं । विद्युत्पुंजप्रतीका
शं रामं कृष्णं जगन्मयं ॥३६॥ गो

गोपिकासमाकीर्णं वेणुवादनतत्परं

। कामरूपंकलावंतंकामिनीकामदं
विभुं ॥ ३७ ॥ मन्मथंमथुरानाथं
माधवं मकरध्वजं । श्रीधरं श्रीकरं
श्रीशं श्रीनिवासं परात्परं ॥ ३८ ॥
भूतेशं भूपतिंभद्रं विभूतिं भूतिभू
षणं । सर्वदुःखहरंवीरं दुष्टदानववै

रिणं ॥३९॥ श्रीनृसिंहंमहाबाहुं म
हांतंदीप्ततेजसं । चिदानंदमयं नि
त्यं प्रणवज्योतिरूपिणं ॥४०॥आ
दित्यमण्डलगतं निश्चितार्थस्वरू
पिणम् । भक्तप्रियंपद्मनेत्रं भक्ताना
मीप्सितप्रदं ॥४१॥ कौसल्येयं क
लामूर्तिं काकुत्स्थं कमलाप्रियम् ।

सिंहासने समासीनं नित्यव्रतमक
ल्मषं ॥ ४२॥ विश्वामित्रप्रियं दांतं
स्वदारानियतव्रतं। यज्ञेशं यज्ञपुरुषं
यज्ञपालनतत्परं ॥४३॥ सत्यसंधं
जितक्रोधं शरणागतवत्सलं। सर्वक्ले
शापहरणं बिभीषणवरप्रदं ॥४४॥
दशग्रीवहरंरौद्रंकेशवंकेशिमर्दनं ।

वालिप्रमथनं वीरं सुग्रीवेप्सितराज्य
दं ॥ ४५॥ नरवानरदेवैश्च सेवितंह
नुमत्प्रियं। शुद्धं सूक्ष्मं परं शांतं ता
रकं ब्रह्मरूपिणं ॥ ४६ ॥ सर्वभूता
त्मभूतस्थं सर्वाधारं सनातनं । सर्व
कारणकर्त्तारं निदानं प्रकृतेःपरं४७
निरामयं निराभासं निरवद्यं निरं

जनं॥नित्यानंदं निराकारमद्वैतं तम
सः परं ॥ ४८॥ परात्परतरं तत्त्वं स
त्यानंदं चिदात्मकं । मनसा शिरसा
नित्यं प्रणमामि रघूत्तमं ॥४९॥ सु
र्यमंडलमध्यस्थं रामं सीतासमन्वि
तं । नमामि पुंडरीकाक्षममेयं गुरुत
त्परं॥५०॥नमोस्तु वासुदेवाय ज्यो

तिषांपतये नमः। नमोस्तु रामदेवा
य जगदानंदरूपिणे ॥५१॥ नमो
वेदांतनिष्ठाय योगिने ब्रह्मवादिने।
मायामयानिरस्ताय प्रपन्नजनसेवि
ने ॥५२॥ वंदामहे महेशानं चंडको
दण्डखण्डनम्। जानकीहृदयानं
दचंदनं रघुनंदनं ॥५३॥ उत्फुल्ला

मलकोमलोत्पलदलश्यामाय रामा
य ते कामाय प्रमदामनोहरगुणग्रा
माय रामात्मने । योगारूढमुनींद्र
मानससरोहंसाय संसारविध्वंसाय
स्फुरदोजसे रघुकुलोत्तंसाय पुंसे न
मः ॥५४॥ भवोद्भवं वेदविदां वरि
ष्ठमादित्यचंद्रानलसुप्रभावम् । स

र्वात्मकं सर्वगतस्वरूपं नमामि रा
मं तमसः परस्तात् ॥५५॥ निरंज
नं निष्प्रतिमं निरीहं निराश्रयं नि
ष्कलमप्रपंचं नित्यं ध्रुवं निर्विषय
स्वरूपं निरंतरं राममहं भजामि
॥५६॥ भवाब्धिपोतं भरताग्रजं तं
भक्तप्रियं भानुकुलप्रदीपम् । भूत

त्रिनाथं भुवनाधिपत्यं भजामि रा
मं भवरोगवैद्यम् ॥ ५७ ॥ सर्वाधि
पत्यं समरे गभीरं सत्यं चिदानंद
मयस्वरूपम् । सत्यं शिवं शांति
मयं शरण्यं सनातनं राममहं भजा
मि ॥५८॥ कार्यक्रियाकारणमप्रमे
यं कविं पुराणं कमलायताक्षं । कु

 मारवैद्यं करुणामयं तं कल्पद्रुमं 
राममहं भजामि ॥५९॥ त्रैलोक्य
नाथं सरसीरुहाक्षं दयानिधिं द्वन्द्व
विनाशहेतुम् । महाबलं वेदनिधिं
सुरेशं सनातनं राममहं भजामि
॥ ६० ॥ वेदांतवेद्यं कविमीशितार 
मनादिमध्यांतमचिंत्यमाद्यं । अ

गोचरं निर्मलमेकरूपं नमामि रा
मं तमसः परस्तात् ॥ ६१ ॥ अशेष
वेदात्मकमादिसञ्ज्ञमजं हरिं विष्णु
मनंतमाद्यं । अपारसंवित्सुखमेक
रूपं परात्परं राममहं भजामि॥६२॥
तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा
पूरितविश्वमेक । राजाधिराजं रवि

मंडलस्थं विश्वेश्वरं राममहं भजा
मि ॥६३॥ लोकाभिरामं रघुवंशना
थंहरिं चिदानंदमयं मुकुंदम् ।अशेष
विद्याधिपतिं कवींद्रं नमामि रामं त
मसः परस्तात् ॥६४॥ योगींद्रसंघै
श्चसुसेव्यमानं नारायणं निर्मलमादि
देवं । नतोस्मि नित्यं जगदेकनाथ

मादित्यवर्णं तमसः परस्तात् ६५
विभूतिदं विश्वसृजं विराजं राजेंद्र
मीशं रघुवंशनाथम् । अचिंत्यमव्य
क्तमनंतमूर्तिं ज्योतिर्मयं राममहं
भजामि ॥६६॥ अशेषसंसारविका
रहीनमादित्यगं पूर्णसुखाभिरामम्
। समस्तसाक्षिं तमसः परस्तान्ना

रायणं विष्णुमहं भजामि ॥ ६७ ॥
मुनींद्रगुह्यं परिपूर्णकामं कलानि
धिं कल्मषनाशहेतुं । परात्परं य
त्परमं पवित्रं नमामि रामं महतो
महांतम् ॥ ६८ ॥ ब्रह्मा विष्णुश्च
रुद्रश्च देवेंद्रो देवतास्तथा । आदि
त्यादिग्रहाश्चैव त्वमेव रघुनंदन ।

॥ ६९ ॥ तापसा ऋषयः सिद्धाः सा
ध्याश्च मरुतस्तथा । विप्रा वेदास्त
था यज्ञाः पुराणं धर्मसंहिताः ७०
वर्णाश्रमास्तथा धर्मा वर्णधर्मास्त
थैव च । यक्षराक्षसगंधर्वा दिक्पा
लादिग्गजादिभिः ॥ ७१ ॥ सनका
दिमुनिश्रेष्ठास्त्वमेव रघुपुंगव । वस

राम वोष्ठौ त्रयः काला रुद्रा एकादश स्त,
१५ स्मृताः ॥७२॥ तारका दशचैवाशा
स्त्वमेव रघुनंदन । सप्तद्वीपाः समु
द्राश्च नगानद्यस्तथा द्रुमाः ॥ ७३॥
स्थावराजंगमाश्चैव त्वमेव रघुनाय
क । देवतिर्यङ्मनुष्याणां दानवा १५
नां तथैव च ॥ ७४॥ माता पिता त

था भ्राता त्वमेव रघुवल्लभ । सर्वेषां
त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ७५
त्वमक्षरं परंज्योतिस्त्वमेव पुरुषोत्त
म । त्वमेवतारकं ब्रह्म त्वत्तोन्यन्नैव
किंच न ॥७६॥ शांतं सर्वगतं सूक्ष्मं
परंब्रह्म सनातनम् । राजीवलोचनं
रामं प्रणमामि जगत्पतिम् ॥ ७७ ॥

 व्यास उवाच । ततः प्रसन्नः श्रीरा 
मः प्रोवाच मुनिपुंगवम् । तुष्टोस्मि
मुनिशार्दूल वृणीष्व वरमुत्तमम् ७८
नारद उवाच । यदितुष्टोऽसि सर्वज्ञ
श्रीराम करुणानिधे । त्वन्मूर्तिदर्श
नेनैव कृतार्थोऽहं च सर्वदा ॥७९॥ 
धन्योहं कृतकृत्योहं पुण्योहं पुरु

पोसम । अद्य मे सफलं जन्म जी

वितं सफलं च मे ॥ ८० ॥ अद्य मे
सफलं ज्ञानमद्य मे सफलं तपः ।
अद्य मे सफलं जन्म त्वत्पादांभो
जदर्शनात् ॥८१॥ अद्य मे सफलं
सर्वं त्वन्नामस्मरणं तथा । त्वत्पा
दांभोरुहद्वंन्द्वसद्भक्तिं देहि राघव

॥८२॥ततः परमसंप्रीतो रामः प्राह
स नारदम्। श्रीराम उवाच। मुनि
वर्य महाभाग मुने त्विष्टं ददामि
ते। यत्त्वया चेप्सितं सर्वं मनसा त
द्भविष्यति ॥८३॥ नारद उवाच।
वरं न याचे रघुनाथ युष्मत्पदाब्ज
भक्तिः सततं ममास्तु। इदं प्रियं

नाथ वरं प्रयाचे पुनः पुनस्त्वामिद
मेव याचे ॥८४॥ व्यास उवाच ।
इत्येवमीडितो रामः प्रादात्तस्मै व
रांतरं । विरराम महातेजाः सच्चिदा
नंदविग्रहः ॥८५॥ अद्वैतममलं ज्ञा
नं त्वन्नाम स्मरणं तथा । अंतर्धा
य जगन्नाथः पुरतस्तस्य राघवः ।

॥८६॥ इति श्रीरघुनाथस्य स्तवराज
मनुत्तमम् । सर्वसौभाग्यसंपत्तिदा
यकं मुक्तिदं शुभं ॥८७॥ कथितं
ब्रह्मपुत्रेण वेदानां सारमुत्तमं । गु
ह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकी
र्तितं ॥८८॥ यः पठेच्छृणुयाद्वापि
त्रिसन्ध्यं श्रद्धयान्वितः । ब्रह्मह

त्यादिपापानि तत्समानि बहूनि च
॥ ८९ ॥ स्वर्णस्तेयसुरापानगुरुतल्प
युतानि च । गोवधाद्युपपापानि
ह्यनृतादिभवानि च ॥ ९० ॥ सर्वैः
प्रमुच्यते पापैः कल्पायुतशतोद्भ
वैः । मानसं वाचिकं पापं कर्मणा
समुपार्जितं ॥ ९१॥ श्रीरामस्मरणे

नैव तत्क्षणान्नश्यति ध्रुवं । इदं स
त्यमिदं सत्यं सत्यमेतदिहोच्यते
॥९२॥ रामः सत्यं परंब्रह्म रामात्
किंचिन्न विद्यते । तस्माद्रामस्व
रूपत्वात् सत्यं सत्यमिदं जगत् ।
॥९३॥ श्रीरामचंद्र रघुपुंगव राज
वर्य राजेंद्र रामरघुनायक राघवेश